# चम्पूरामायणे

# बालकाण्डम्

१० – १५.०१.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# पुनरावर्तनम्

- अपि कुशलममर्त्याः – भगवतः कुशलप्रश्नः
- एवं भगवतः – नारायणस्य वाक्प्रसादेनैव तुष्टाः देवाः विज्ञापयन्ति
- देव, कथमकुशलम् – देवानां वचनस्य पीठिका

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या
लङ्केति नाम रजनीचरराजधानी ।
माणिक्यमन्दिरभुवां महसां प्ररोहैः
तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥ १८ ॥

- लङ्कायाः वर्णनम् ।
- अस्ति, प्रशस्त-विभवैः, विबुधैः, अलङ्घ्या, लङ्का, इति, नाम, रजनीचर-राजधानी, माणिक्य-मन्दिर-भुवाम्, महसाम्, प्ररोहैः, तेजस्-त्रयाय, दिन-दीप-दशाम्, दिशन्ती

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या लङ्केति नाम रजनीचरराजधानी ।
माणिक्यमन्दिरभुवां महसां प्ररोहैः तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥ १८ ॥

- अस्ति = विद्यते
- का अस्ति? रजनीचरराजधानी – रजनीचराणाम् = राक्षसानाम्, राजधानी = प्रधाननगरी
- कीदृशी राजधानी? लङ्केति नाम = लङ्कानाम्ना प्रसिद्धा
- पुनः कीदृशी? अलङ्घ्या = अतिशयितुम् अशक्या

Samskrtam · Value Education · Technology

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या लङ्केति नाम रजनीचरराजधानी ।
माणिक्यमन्दिरभुवां महसां प्ररोहैः तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥ १८ ॥

- कैः अलङ्घ्या? विबुधैः = देवैः
- कीदृशैः विबुधैः? प्रशस्तविभवैः – प्रशस्तः = प्रख्यातः, विभवः = सम्पत् येषां तादृशैः
- पुनः कीदृशी? दिशन्ती = कल्पयन्ती
- किं दिशन्ती? दिनदीपदशाम् – दिने = अह्नि, यः दीपः = प्रदीपः, तस्य दशाम् = अवस्थाम् । निस्तेजकताम् इत्यर्थः ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या लङ्केति नाम रजनीचरराजधानी ।
माणिक्यमन्दिरभुवां महसां प्ररोहैः तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥ १८ ॥

- कस्मै दिशन्ती? तेजस्त्रयाय = सूर्य-चन्द्र-अग्निभ्यः
- कथं दिशन्ती? प्ररोहैः = अङ्कुरैः
- केषां प्ररोहैः? महसाम् = तेजसाम्
- केषां महसाम्? माणिक्यमन्दिरभुवाम् – मणिमयगृहप्रभवानाम्
- लङ्कायाः मणिमण्डपानां तेजसां पुरतः सूर्य-चन्द्र-अग्नीनामपि निस्तेजकत्वम् आपतितम् इत्यर्थः

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या लङ्केति नाम रजनीचरराजधानी ।
माणिक्यमन्दिरभुवां महसां प्ररोहैः तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥ १८ ॥

- अन्वयः – प्रशस्तविभवैः विबुधैः अलङ्घ्या, माणिक्यमन्दिरभुवां महसां प्ररोहैः तेजस्त्रयाय दिनदीपदशां दिशन्ती लङ्का इति नाम रजनीचरराजधानी अस्ति
- तात्पर्य्यम् – लङ्कानाम्नी राक्षसानां प्रधाननगरी विद्यते, या प्रख्यातसम्पद्भिः देवैः अपि अतिशयितुम् अशक्या । तस्याः मणिमयभवनानां तेजसा सूर्य-चन्द्र-अग्नयः अपि दिनदीपाः इव निस्तेजसः दृश्यन्ते ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या लङ्केति नाम रजनीचरराजधानी ।
माणिक्यमन्दिरभुवां महसां प्ररोहैः तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥ १८ ॥

- काञ्चनेनावृतां रम्यां प्राकारेण महापुरीम् ।
  गृहैश्च ग्रहसंकाशैः शारदाम्बुदसन्निभैः ॥ ५-२-१६ ॥
- तोरणैः काञ्चनैर्दिव्यैर्लतापङ्क्तिविचित्रितैः ।
  ददर्श हनुमान् लङ्कां दिवि देवपुरीं यथा ॥ ५-२-१८ ॥
- पालितां राक्षसेन्द्रेण निर्मितां विश्वकर्मणा ।
  प्लवमानामिवाकाशे ददर्श हनुमान् पुरीम् ॥ ५-२-२० ॥

अस्ति प्रशास्तविभवैर्विबुधैरलङ्घ्या लङ्केति नाम रजनीचरराजधानी ।
माणिक्यमन्दिरभुवां महसां प्ररोहैः तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥ १८ ॥

- प्रशास्तविभवैः – प्रशास्तः विभवः येषां ते, तैः
- विबुधैः – "अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः" (अमरः)
- अलघ्ङ्घ्या – लङ्घितुं शक्या लङ्घ्या – "लघि गतौ" + ण्यत् (कृत्), न लङ्घ्या
- रजनीचरराजधानी – रजन्यां चरन्ति इति रजनीचराः – रजनी – चर्+ट (कृत्), रजनीचराणां राजधानी

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या लङ्केति नाम रजनीचरराजधानी ।
माणिक्यमन्दिरभुवां महसां प्ररोहैः तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥ १८ ॥

- माणिक्यमन्दिरभुवाम् – माणिक्यमयानि/माणिक्यप्रचुराणि मन्दिराणि – मध्यमपदलोपी कर्मधारयः, माणिक्यमन्दिरं भूः येषां तानि, तेषाम्
- महसाम् – सकारान्तः, नपुं, ६.३ । "महस्तूत्सवतेजसोः" (अमरः)
- तेजस्त्रयाय – त्रयः अवयवाः यस्य – त्रि + तयप् (तद्धित) । तेजसां त्रयम्, तस्मै ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या लङ्केति नाम रजनीचरराजधानी ।
माणिक्यमन्दिरभुवां महसां प्ररोहैः तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥ १८ ॥

- दिनदीपदशाम् – दिने दीपः, दिनदीपस्य दशा, ताम्
- दिशन्ती – "दिश अरिसर्जने" (अतिसर्जनं = त्यागः दानं च) + शतृ (कृत्) + ङीप् (स्त्री)
- अतिशयोक्तिः अलङ्कारः
- वसन्ततिलका वृत्तम्

एनां पुराणनगरीं नगरीतिसालां
सालाभिरामभुजनिर्जितयक्षराजः ।
हेलाभिभूतजगतां रजनीचराणां
राजा चिरादवति रावणनामधेयः ॥ १९ ॥

- रावणवर्णनस्य आरम्भः
- एनाम्, पुराण-नगरीम्, नग-रीति-सालाम्, साल-अभिराम-भुज-निर्जित-यक्ष-राजः, हेला-अभिभूत-जगताम्, रजनी-चराणाम्, राजा, चिरात्, अवति, रावण-नामधेयः

एनां पुराणनगरीं नगरीतिसालां सालाभिरामभुजनिर्जितयक्षराजः ।
हेलाभिभूतजगतां रजनीचराणां राजा चिरादवति रावणनामधेयः ॥ १९ ॥

- अवति = पालयति
- कां पालयति? एनाम् = पूर्वोक्तां लङ्काम्
- कीदृशीम् एनाम्? पुराणनगरीम् = पुरातनपुरीम्
- पुनः कीदृशीम्? नगरीतिसालाम् – नगस्य = पर्वतस्य, रीतिः = आकृतिः यस्य तादृशः सालः = प्राकारः यस्याः ताम् । पर्वतोपमप्राकाराम् अतिदुर्गमाम् इत्यर्थः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

एनां पुराणनगरीं नगरीतिसालां सालाभिरामभुजनिर्जितयक्षराजः ।
हेलाभिभूतजगतां रजनीचराणां राजा चिरादवति रावणनामधेयः ॥ १९ ॥

- कः अवति? राजा = नृपः
- केषां राजा? रजनीचराणाम् = राक्षसानाम्
- कीदृशानां रजनीचराणाम्? हेलाभिभूतजगताम् – हेलया = लीलया, अभिभूतानि = तिरस्कृतानि/पराजितानि, जगन्ति = लोकाः यैः तेषाम्
- किंनामधेयो राजा? रावणनामधेयः = रावणनामकः

एनां पुराणनगरीं नगरीतिसालां सालाभिरामभुजनिर्जितयक्षराजः ।
हेलाभिभूतजगतां रजनीचराणां राजा चिरादवति रावणनामधेयः ॥ १९ ॥

- कीदृशः राजा? सालाभि...यक्षराजः – सालाः = सर्जवृक्षाः इव, अभिरामाः = मनोज्ञाः, भुजाः = बाहवः विंशतिसंख्याकाः, तैः निर्जितः = पराजितः, यक्षराजः = कुबेरः येन तादृशः
- कदा अवति? चिरात् = बहोः कालात्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

एनां पुराणनगरीं नगरीतिसालां सालाभिरामभुजनिर्जितयक्षराजः ।
हेलाभिभूतजगतां रजनीचराणां राजा चिरादवति रावणनामधेयः ॥ १९ ॥

- अन्वयः – एनां नगरीतिसालां पुराणनगरीं रावणनामधेयः, सालाभिरामभुजनिर्जितयक्षराजः, हेलाभिभूतजगतां रजनीचराणां राजा चिरात् अवति ।
- तात्पर्य्यम् – गिरिदुर्गैः आवृताम् इमां लङ्कानगरीं रावणो नाम राजा पालयति । सः रावणः स्वस्य सालवृक्षसदृशैः भुजैः यक्षराजं कुबेरं पराजितवान् । तस्य नेतृत्वे राक्षसाः सर्वान् लोकान् लीलया जितवन्तः ।

एनां पुराणनगरीं नगरीतिसालां सालाभिरामभुजनिर्जितयक्षराजः ।
हेलाभिभूतजगतां रजनीचराणां राजा चिरादवति रावणनामधेयः ॥ १९ ॥

- एनाम् – एतद्/इदम् शब्दः, २.१ । “द्वितीयाटौस्स्वेनः” (२.४.३४)
- पुराणनगरीम् – पुरा भवा – पुरा + ट्यु (तद्धितः) + ङीप् (स्त्री), पुराणी नगरी, ताम्
- नगरीतिसालाम् – नगानां रीतिः यस्य सः, नगरीतिः सालः यस्याः सा, ताम्। “प्राकारो वरणः <u>सालः</u>” (अमरः)

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

एनां पुराणनगरीं नगरीतिसालां सालाभिरामभुजनिर्जितयक्षराजः ।
हेलाभिभूतजगतां रजनीचराणां राजा चिरादवति रावणनामधेयः ॥ १९ ॥

- साला..राजः – सालाः इव अभिरामाः, सालाभिरामाः भुजाः, सालाभिरामभुजैः निर्जितः, यक्षाणां राजा, सालाभिरामभुजनिर्जितः यक्षराजः येन सः । "साले तु सर्ज-कार्श्य-अश्वकर्णकाः सस्यसंवरः" (अमरः)
- हेलाभिभूतजगताम् – हेलया अभिभूतानि, हेलाभिभूतानि जगन्ति यैः ते, तेषाम् । तकारान्तः, पुं, ६.३ ।
- रजनीचराणाम् – रजन्यां चरन्ति – रजनी – चर्+ट (कृत्)

Vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education · Technology

एनां पुराणनगरीं नगरीतिसालां सालाभिरामभुजनिर्जितयक्षराजः ।
हेलाभिभूतजगतां रजनीचराणां राजा चिरादवति रावणनामधेयः ॥ १९ ॥

- राजा – नकारान्तः, पुं, १.१, "राजा राट्-पार्थिव-क्ष्माभृत्-नृप-भूप-महीक्षितः" (अमरः)
- चिरात् – विभक्तिप्रतिरूपकम् अव्ययम् । "चिराय चिररात्राय चिरस्याद्याः चिरार्थकाः" (अमरः)
- अवति – "अव रक्षणादौ" – लट्, प्रथम.१

एनां पुराणनगरीं नगरीतिसालां सालाभिरामभुजनिर्जितयक्षराजः ।
हेलाभिभूतजगतां रजनीचराणां राजा चिरादवति रावणनामधेयः ॥ १९ ॥

- रावणनामधेयः – रावणः नामधेयं यस्य सः । विश्रवसः अपत्यम् – विश्रवस् + अण् (तद्धितः), “विश्रवसो विश्रवणरवणौ” (ग.सू.४.१.११२) इति प्रकृतेः रवणादेशः – वैश्रवणः, रावणः । रावयतीति रावणः – “रु शब्दे”+णिच्+ल्युट् ।
- “शैलाक्रान्तेन यो मुक्तस्त्वया रावः सुदारुणः । यस्माल्लोकत्रयं चैतद्रावितं भयमागतम् । तस्मात्त्वं रावणो नाम नाम्ना वीर भविष्यसि” (रामा० ७.१६.४३)

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

यद्बाहुराहुरसनायितशस्त्रधाराः
दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति ।
यद्वैरिणां रणमुखे शरणप्रदायी
नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥ २० ॥

- यद्-बाहु-राहु-रसनायित-शस्त्र-धाराः, दिक्पाल-कीर्तिमय-चन्द्रमसम्, ग्रसन्ति, यद्-वैरिणाम्, रण-मुखे, शरण-प्रदायी, न, एव, अस्ति, कश्चित्, अमुम्, अन्तकम्, अन्तरेण

यद्बाहुराहुरसनायितशस्त्रधाराः दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति ।
यद्वैरिणां रणमुखे शरणप्रदायी नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥ २० ॥

- ग्रसन्ति = गिलन्ति
- के ग्रसन्ति? यद्बाहु..धाराः – यस्य = रावणस्य, बाहवः = भुजाः एव, राहवः = विधुन्द्तुदाः, तेषां रसनायिताः = जिह्वारूपाः, शस्त्रधाराः = आयुधश्रेणयः
- किं ग्रसन्ति? दिक्पाल...चन्द्रमसम् – दिक्पालानाम् = इन्द्रादीनां दिगीश्वराणां, कीर्तिमयः = यशोरूपः, यः चन्द्रमाः = इन्दुः, तम्

Vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value E...

# यद्बाहुराहुरसनायितशस्त्रधाराः दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति ।
# यद्वैरिणां रणमुखे शरणप्रदायी नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥ २० ॥

- नैव अस्ति = सर्वथा न विद्यते
- कः नैवास्ति? कश्चित् = यः कोऽपि
- शरणप्रदायी = रक्षणशीलः
- केषां शरणप्रदायी? यद्वैरिणाम् – यस्य = रावणस्य, वैरिणाम् = शत्रूणाम्

यद्बाहुराहुरसनायितशस्त्रधाराः दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति ।
यद्वैरिणां रणमुखे शरणप्रदायी नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥ २० ॥

- कुत्र शरणप्रदायी? रणमुखे = युद्धभूमेः अग्रभागे
- अन्तरेण = विना
- कम् अन्तरेण? अमुम् = एनं (पुरःस्थितम्), अन्तकम् = यमम्

## यद्बाहुराहुरसनायितशस्त्रधाराः दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति ।
## यद्वैरिणां रणमुखे शरणप्रदायी नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥ २० ॥

- अन्वयः – यद्बाहुराहुरसनायितशस्त्रधाराः दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति, अमुम् अन्तकम् अन्तरेण यद्वैरिणां रणमुखे शरणप्रदायी कश्चित् नैव अस्ति (तादृशः रावणनामधेयः अवति इति पूर्वश्लोकेन अन्वयः) ।
- तात्पर्य्यम् – रावणस्य भुजाः एव राहुरूपाः, तैः गृहीतानि अस्त्राणि एव जिह्वारूपाणि, तैः इन्द्रादीनां दिक्पालकानां कीर्तिरूपः चन्द्रः कवलीक्रियते। रणाङ्गणे रावणस्य अरीन् त्रातुं कोऽपि न शक्नोति – सर्वेऽपि ते निश्चयेन यमलोकं प्राप्नुवन्ति ।

Vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value E...

# यद्बाहुराहुरसनायितशस्त्रधाराः दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति ।
# यद्वैरिणां रणमुखे शरणप्रदायी नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥ २० ॥

- यद्बाहु... – यस्य: बाहवः, यद्बाहवः एव राहवः, यद्बाहुराहूणां रसनायिताः, शस्त्राणां धाराः, यद्बाहुराहुरसनायिताः शस्त्रधाराः । रसना इव आचरन्ति – रसना + क्यप् (नामधातुः) + कर्तरि क्तः (कृत्)
- दिक्पालकीर्तिमयचन्द्रमसम् – दिशां पालाः, दिक्पालानां कीर्तिमयः, दिक्पालकीर्तिमयः चन्द्रमाः, तम् । सकारान्तः, पुं, २.१ । “हिमांशुः चन्द्रमाः चन्द्रः इन्दुः कुमुदबान्धवः” (अमरः)

## यद्बाहुराहुरसनायितशस्त्रधाराः दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति ।
## यद्वैरिणां रणमुखे शरणप्रदायी नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥ २० ॥

- ग्रसन्ति – "ग्रसु अदने" – लट्, प्रथम.३
- यद्वैरिणाम् – यस्य वैरिणः, तेषाम् । नकारान्तः, पुं, ६.३
- रणमुखे – रणस्य मुखम्, तस्मिन्
- शरणप्रदायी – शरणं प्रदातुं शीलं यस्य सः – णिनिः (कृत्) – उपपदसमासः । नकारान्तः, पुं, १.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value E...

# यद्बाहुराहुरसनायितशस्त्रधाराः दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति ।
# यद्वैरिणां रणमुखे शरणप्रदायी नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥ २० ॥

- अमुम् – सकारान्तः पुं, ‘अदस्’, २.१
- अन्तकम् – “कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः” (अमरः)
- अन्तरेण – अव्ययम् । “अन्तरान्तरेण युक्ते” (२.३.४) – द्वितीयाविभक्तिः ।
- रूपकालङ्कारः ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# सङ्क्षेपः

- अस्ति प्रशस्तविभवैः – लङ्कायाः वर्णनम्
- एनां पुराणनगरीम् – लङ्कायाः राजा रावणः, तस्य वर्णनारम्भः
- यद्बाहुराहु – रावणस्य पराक्रमेण निरस्ताः दिक्पालकाः, वैरिणश्च यमलोकं प्राप्ताः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in